**तिङास्थि ॥ १० ॥**

अस्तेस्तिङा तिबादिना सह अत्थि इत्यादेशो भवति । अत्थि सो । अत्थि ते । अत्थि तुमं । अत्थि तुम्हे । अत्थि अहं । अत्थि अम्हे ॥ १० ॥

**णिजदेदावावे ॥ ११ ॥**

धातोः प्रेरणार्थे विहितो यो णिच्प्रत्ययः, सः अत् एत् आव आवे इति चतुर आदेशानाप्नोति । तकारस्तावन्मात्रत्वप्रदर्शनार्थः । अत्—दरिसइ॥ एत्—कारेइ ॥ आव—कारावइ ॥ आवे—कारावेइ ॥ हासावइ हासइ हासावेइ हासेइ ॥ उवसमावइ उवसमेइ ॥ बहुलाधिकारात्क्वचिदेन्नास्ति । जाणइ जाणावइ जाणावेइ ॥ क्वचिदावे नास्ति । धावइ धावेइ धावावइ ॥ ११ ॥

**शुष्यादेरविर्वा ॥ १२ ॥**

णिजित्यनुवर्तते । शुष्यादिणिचः अविः इति वा भवति । शोषितं सोसाविअं सोसिअं ॥ तोषितं तोसाविअं तोसिअं ॥ १२ ॥

**भ्रमेराडः ॥ १३ ॥**

भ्रमेर्धातोः परो णिच् आड इति वा भवति । भमाडइ ॥ पक्षे । भामइ भामेइ भमावइ भमावेइ ॥ १३ ॥

**लुगाविल् भावकर्मक्ते ॥ १४ ॥**

भावकर्मविहिते प्रत्यये क्तप्रत्यये च परे णिच् लुक् आवि इत्यादेशावाप्नोति । लित्त्वान्न विकल्पः॥ भावकर्मणोः । कारिअइ काराविअइ कारिज्जइ काराविज्जइ । हासिअइ हासाविअइ हासिज्जइ हासाविज्जइ ॥ क्ते । कारिअं काराविअं । हासिअं हासाविअं । खामिअं खामाविअं ॥ १४ ॥

---

**10.** M तिङा अत्थि for the Sūtra. 11. S तावन्मात्रप्रदर्शनार्थः for तावन्मात्रत्वप्रदर्शनार्थः. M करावेइ for कारावइ. After उवसमावइ K adds उवसमावेइ. K आणावेइ for जाणइ जाणावेइ. B यावइ थावेइ यावावइ for धावइ धावेइ. M om. धावावइ. 12. S शुष्यादिः in the Sūtra. M शुष्यादिर्णिच् for शुष्यादिणिचः. 13. MS om. भामइ भामेइ. 14. MS om. क्तप्रत्यये. MST लुकं for लुक्. KMS इत्यादेशं चाप्नोति for इत्यादेशावाप्नोति. M कारीअइ करावीअइ for कारिअइ काराविअइ. MS हसाविअइ for हासा°. S खमविअं for खामाविअं.

**अदेल्लुक्यादेरत आः ॥ १५ ॥**

अत् एत् लुक् इत्येतेषु णिचः स्थाने विहितेषु खोरादेरतः अकारस्य आत् आत्वं भवति । अत्—पाडइ । मारइ ॥ एत्—कारेइ । मारेइ । खामेइ ॥ लुक्—कारिअइ कारिज्जइ । खामिअइ खामिज्जइ । अदेल्लुगिति किम् । कारविअं कारिअं । काराविअइ काराविज्जइ ॥ खोरिति किम् । संगामेइ ॥ इह व्यवहितस्य मा भूत् ॥ कारिअं । इह अन्त्यस्य मा भूत् ॥ अत इति किम् । आसेइ ॥ केचित्तु आवे आवि इत्येतयोरपि आदेरत आत्वमिच्छन्ति । कारवेइ । हासाविओ जणो सामलङ्गीए ॥ १५ ॥

**तु मौ ॥ १६ ॥**

अत इत्यनुवर्तते आदिति च । अदन्ताद्धातोः मौ लडुत्तमपुरुषैकवचनादेशे परे सति आद्भवति तु । हसामि हसमि । जाणामि जाणमि । लिहामि लिहमि ॥ अत इत्येव । होमि ॥ १६ ॥

**मोमुमेष्विच्च ॥ १७ ॥**

त्वित्यनुवर्तते । आकारान्ताद्धातोः मो म मु इत्येतेषु परेषु अत इत्वं चकारादात्वं च भवति तु । भणिमो भणामो । भणिम भणाम । भणिमु भणामु ॥ पक्षे । भणमो भणम भणमु ॥ 'वा लड्लोट्लृट्छत्रृषु' [२·४·२०] इत्येत्वे तु । भणेमो भणेम भणेमु ॥ अत इत्येव । होमो ॥ १७ ॥

**क्ते ॥ १८ ॥**

इदित्यनुवर्तते । क्तप्रत्यये परे अत इत्वं भवति । हसिअं । पढिअं नमिअं ॥ हासिअं । पाढिअं । नामिअं ॥ णअं गअं इत्यादि तु सिद्धावस्थापेक्षया ॥ अत इत्येव । ठूअं । हूअं ॥ १८ ॥

---

15. KMS कराविज्जइ कराविअइ for करा°. M om. लुक्-कारिअइ; S लुक्-कारावइ कारेज्जइ. B संगामइ for संगामेइ. KMS कारावइ; T कारावेइ for कारवेइ. M दूसेइ for आसेइ. 16. M om. तु in the Sūtra. M om. परे सति. M om. तु in Com. M जाणेमि for जाणमि. 17. KS भणिमु for भणेमो भणेम भणेमु. 18. BT पसिअं for पढिअं; B पासिअं; T पसिअं for पाढिअं. B नअअं; M णाअं; T भअं for णअं.

**एच क्त्वातुंतव्यभविष्यति ॥ १९ ॥**

क्त्वातुंतव्येषु भविष्यत्कालविहिते च प्रत्यये परतः अत एत्वं चकारादित्वं च भवति । क्त्वा—हसेऊण हसिऊण ॥ तुम्—हसेउं ॥ तव्य—हसेअव्वं हसिअव्वं ॥ भविष्यत्—हसेहिइ हसिहिइ । अत इत्येव । जाऊण । काऊण ॥ १९॥

**वा लट्लोट्छतृषु ॥ २० ॥**

एदित्यनुवर्तते । लट् वर्तमानं, लोट् पञ्चमी, तयोः शतृप्रत्यये च परतः अत एत्वं वा भवति । लट्—हसेइ हसइ । हसेम हसिम ॥ लोट्—हसेउ हसउ । सुणेउ सुणउ ॥ शतृ—हसेन्तो ॥ क्वचिन्न भवति । जअइ ॥ क्वचिदात्वमपि । सुणाइ ॥ २० ॥

**ज्जा ज्जे ॥ २१ ॥**

ज्जा ज्ज इत्येतयोः परयोरत एत्वं भवति । हसेज्जा हसेज्ज ॥ अत इत्येव । होज्जा होज्ज ॥ २१ ॥

**भूतार्थस्य सी हीअ ही ॥ २२ ॥**

भूतार्थे विहितो योऽनद्यतनादिप्रत्ययः स भूतार्थः, लुङ् लङ् लिट्, तस्य स्थाने सी हीअ ही इति त्रय आदेशा भवन्ति । उत्तरत्र 'हल ईअ' ( २·२·२३ ) इति विधानात्स्वरान्तादेवायं विधिः । कासी काहीअ काही, अकार्षीत् अकरोत् चकार वा ॥ एवं ठासी ठाहीअ ठाही ॥ २२ ॥

**हल ईअ ॥ २३ ॥**

भूतार्थस्येत्यनुवर्तते । हलन्ताद्धातोः परस्य भूतार्थस्य लुङादिप्रत्ययस्य ईअ इत्यादेशो भवति । भुवीअ, अभूत् अभवत् बभूव वा ॥ एवं आसीअ, आसिष्ट आस्त आसांचक्रे वा ॥ गहीअ, अग्रहीत् अगृह्णात् जग्राह वा ॥ २३ ॥

---

19. K om. काऊण. KST om. जाऊण. 20. S वर्तमाना; T वर्तमानो for °मानं. KS जलइ for जअइ. 21. S om अतः. 22. BS सि हिअ हि for सी हीअ ही in the Sūtra. K makes no distinction between short and long इ. KMS लुङादिप्रत्ययः; B अनद्यतनादिः प्रत्ययः for अनद्यतनादिप्रत्ययः. KS make no distinction between short and long इ in the verbal forms under this Sūtra. After चकार B om. वा. 23. M om. भूतार्थस्य. B हुईअ for भुवीअ. M गेण्हीअ for गहीअ.

**अहेस्यासी तेनास्तेः ॥ २४ ॥**

अस्तेर्धातोः तेन भूतार्थेन प्रत्ययेन सह अहेसि आसि इत्यादेशौ भवतः । अहेसि सो तुमं अहं वा । जे अहेसि, ये आसन् । एवं आसि ॥ ॥ २४ ॥

**भविष्यति हिरादिः ॥ २५ ॥**

भविष्यदर्थविहितप्रत्यये परतः तस्यैवादिः हि इति प्रयोक्तव्यः । होहिइ, भविष्यति भविता वा । होहिन्ति । होहिसि होहित्था । होहिम । हसिहिइ । काहिइ ॥ २५ ॥

**हा सा मिमोमुमे वा ॥ २६ ॥**

भविष्यतीत्यनुवर्तते आदिरिति च । भविष्यत्यर्थे उत्तमपुरुषादेशेषु परेषु तेषामेवादिः हा सा इत्येतौ वा प्रयोक्तव्यौ । पक्षे हिरपि । होहामि होस्सामि । होहामो होस्सामो । होहामु होस्सामु । होहाम होस्साम । होहिमो होहिमु होहिमि होहिम ॥ क्वचित्तु हा न भवति । हसिहिमो हसिस्सामो । हसिहिमु हसिस्सामु । हसिहिम हसिस्साम ॥ २६ ॥

**हिस्सा हित्था मुमोमस्य ॥ २७ ॥**

वेत्यनुवर्तते । भविष्यति काले मु मो म इत्येतेषां स्थाने हिस्सा हित्था इत्येतौ धातोः परतो वा प्रयोक्तव्यौ । होहिस्सा होहित्था ॥ पक्षे । होहिमु होहिमो होहिम ॥ क्वचित्तथा न भवति । होस्सामो इत्यादि ॥ २७ ॥

---

25. KS om. परतः; M परे for परतः. K होहिमि for होहिम. After होहिम K adds होहिमो. 26. KST हास्सा; M हा सा for हा सा in the Sūtra and Com. K भविष्यदर्थे for भविष्यत्यर्थे. K इत्येतावादेशौ for इत्येतौ. MS om. from हसिस्सामो down to हसिस्साम. 27. After होहित्था KM add हसिहिस्सा हसिहित्था. M om. क्वचित् तथा न भवति । होस्सामो इत्यादि. S om. इत्यादि.

**इच्छ दृशिगम इजादौ हिलुक्च वा ॥ २८ ॥**

दृश् गम् इत्याभ्यां धातुभ्यां भविष्यदादिषु इच् इत्यादिषु परेषु डित् अच्छ इत्ययं वा भवति, हेश्च लुग्वा भवति। डित्वादन्त्याजादेर्लुक् ॥ दच्छिइ दच्छिहिइ। दच्छिन्ति दच्छिहिन्ति। दच्छिसि दच्छिहिसि। दच्छित्था दच्छिहित्था। दच्छिह दच्छिहिह। दच्छिमि दच्छिहिमि। दच्छिहामि दच्छिस्सामि। दच्छिस्सं दच्छिहिस्सं। दच्छिमो दच्छिहिमो। दच्छिहामो दच्छिस्सामो। दच्छिहिस्सा दच्छिहित्था। दच्छिम दच्छिहिम। दच्छिहाम दच्छिस्साम। दच्छिमु दच्छिहिमु। दच्छिहामु दच्छिस्सामु ॥ एवं गच्छिइ गच्छिहिइ। गच्छिन्ति गच्छिहिन्ति। गच्छिसि गच्छिहिसि। गच्छित्था गच्छिहित्था। गच्छिह गच्छिहिह। गच्छिमि गच्छिहिमि। गच्छिहामि गच्छिस्सामि। गच्छिस्सं गच्छिहिस्सं। गच्छिमो गच्छिहिमो। गच्छिहामो गच्छिस्सामो। गच्छिहिस्सा गच्छिहित्था। गच्छिम गच्छिहिम। गच्छिहाम गच्छिस्साम। गच्छिमु गच्छिहिमु। गच्छिहामु गच्छिस्सामु ॥ २८ ॥

**भिदिविदिच्छिदो एच्छ ॥ २९ ॥**

हिलुक् च वेत्यनुवर्तते, इजादाविति च। भिद् विद् छिद् इत्येतेभ्यो धातुभ्यो भविष्यदर्थेषु तिमाद्यादेशेषु परेषु डित् एच्छ इत्ययं वा भवति, हिलुक् च वा। भिदि—भेच्छिहि भेच्छिहिइ। भेच्छिन्ति भेच्छिहिन्ति। भेच्छिसि भेच्छिहिसि। भेच्छित्था भेच्छिहित्था। भेच्छिह भेच्छिहिह। भेच्छिम भेच्छिहिम। भेच्छिमि भेच्छिहिमि। भेच्छिहामि भेच्छिस्सामि। भेच्छिस्सं भेच्छिहिस्सं। भेच्छिमो भेच्छिहिमो। भेच्छिहामो भेच्छिस्सामो। भेच्छिहिस्सा भेच्छिहित्था ॥ एवं मम्बोऽपि ॥ विदि—वेच्छिहि वेच्छिहिइ। वेच्छिन्ति वेच्छि-

28. KS इजादिषु परेषु for इच् इत्यादिषु परेषु. S अंत्याचादेः for अन्त्याजादेः. KS दच्छिस्सि दच्छिहिस्सि for दच्छिसि दच्छिहिसि. KMS दच्छं; T दच्छि for दच्छिहिस्सं. S दच्छिहामु for दच्छिहिमु. MST गच्छं for गच्छिहिस्सं. See under Sūtra 31 below. 29. The Mss. use ह and म promiscuously. K om. भेच्छिहिस्सं; MS भेच्छं for भेच्छिहिस्सं. KMST वेच्छं for वेच्छिहिस्सं.

हिन्ति। वेच्छिसि वेच्छिहिसि। वेच्छित्था वेच्छिहित्था। वेच्छिह वेच्छिहिह। वेच्छिमि वेच्छिहिमि। वेच्छिहामि वेच्छिस्सामि। वेच्छिस्सं वेच्छिहिस्सं। वेच्छिमो वेच्छिहिमो। वेच्छिहिमो। वेच्छिहामो वेच्छिस्सामो। वेच्छिहिस्सा वेच्छिहित्था॥ एवं मम्वोरपि॥ छिदिर्—छेच्छिहि छेच्छिहिइ। छेच्छिन्ति छेच्छिहिन्ति। छेच्छिसि छेच्छिहिसि। छेच्छित्था छेच्छिहित्था। छेच्छिह छेच्छिहिह। छेच्छिम छेच्छिहिम। छेच्छिमि छेच्छिहिमि। छेच्छिहामि छेच्छिस्सामि। छेच्छिस्सं छेच्छिहिस्सं। छेच्छिमो छेच्छिहिमो। छेच्छिहामो छेच्छिस्सामो। छेच्छिहिस्सा छेच्छिहित्था॥ एवं एम्वोरपि॥ २९॥

**डोच्छ वचिमुचिरुदिश्रुभुजः॥ ३०॥**

वचि मुचि रुदि श्रु भुजि इत्येतेभ्यो धातुभ्यो भविष्यदर्थेषु तिबाद्यादेशेषु इजादिषु परेषु डित् ओच्छ इति वा भवति, हिलुक् च वा। वचि—वोच्छिइ वोच्छिहिइ। वोच्छिन्ति वोच्छिहिन्ति। वोच्छिसि वोच्छिहिसि। वोच्छित्था वोच्छिहित्था। वोच्छिह वोच्छिहिह। वोच्छिमि वोच्छिहिमि। वोच्छिहामि वोच्छिस्सामि। वोच्छिस्सं वोच्छिहिस्सं। वोच्छिमो वोच्छिहिमो। वोच्छिहामो वोच्छिस्सामो। वोच्छित्था वोच्छिहित्था॥ एवं मम्वोरपि॥ मुचि—मोच्छिहि मोच्छिहिइ। मोच्छिन्ति मोच्छिहिन्ति। मोच्छिसि मोच्छिहिसि। मोच्छित्था मोच्छिहित्था। मोच्छिह मोच्छिहिह। मोच्छिमि मोच्छिहिमि। मोच्छिहामि मोच्छिस्सामि। मोच्छिस्सं मोच्छिहिस्सं। मोच्छिमो मोच्छिहिमो। मोच्छिहामो मोच्छिस्सामो। मोच्छित्था मोच्छिहित्था॥ एवं मम्वोरपि॥ रुदि—रोच्छिहि रोच्छिहिइ। रोच्छिन्ति रोच्छिहिन्ति॥ एवं स्सादिष्वपि॥ श्रु—सोच्छिहि सोच्छिहिइ। सोच्छिन्ति सोच्छिहिन्ति। सोच्छिसि सोच्छिहिसि॥ एवमिडादिष्वपि॥ भुजि—भोच्छिहि भोच्छिहिइ। भोच्छिन्ति भोच्छिहिन्ति। भोच्छिसि भोच्छिहिसि॥ एवमिडादिष्वपि॥ ३०॥

---

KMS om. वेच्छिहिमो. KS छेच्छं for छेच्छिहिस्सं. M om. from छेच्छित्था down to the end of this Sūtra. 30. KMT वोच्छं; S ओच्छं for वोच्छिहिस्सं. KMST मोच्छं for मोच्छिहिस्सं. KMST छेच्छं for छेच्छिहिस्सं. 31. S उत्तमपुरुषादेक° for °पुरुषैक°. S om. तु. K वा for तु. M om. गच्छं गमिष्यामि.

**हं मेश्छात्ततः ॥ ३१ ॥**

भविष्यति दृशादिभ्यो धातुभ्यः परतः पूर्वसूत्रैस्त्रिभिरुक्तानां दच्छवेच्छ-वोच्छानां यश्छकारः ततः परस्य मेः उत्तमपुरुषैकवचनादेशस्य स्थाने ङित् थं इत्यादेशस्तु भवति । दच्छं द्रक्ष्यामि । गच्छं गमिष्यामि । संगच्छं संगंस्ये । मेच्छं भेत्स्यामि । वेच्छं वेदिष्यामि । छेच्छं छेत्स्यामि । वोच्छं वक्ष्यामि । मोच्छं मोक्ष्यामि । रोच्छं रोदिष्यामि । सोच्छं श्रोष्यामि । भोच्छं भोक्ष्ये ॥ पक्षे दच्छिमि दच्छिहिमि दच्छिहामि दच्छिस्सामि दच्छिस्सं ॥ एवं गमादिष्व-प्युदाहार्यम् ॥ छात्तत इति किम् । हि हा स्सा इत्येतेभ्यः परो मा भूत् । गच्छिहिमि गच्छिहामि गच्छिस्सामि ॥ ३१ ॥

**कृदो हं ॥ ३२ ॥**

मेरित्यनुवर्तते । करोतेर्ददातेश्च परतो भविष्यति विहितस्य मेः स्थाने हं इति वा प्रयोक्तव्यः। काहं । दाहं ॥ पक्षे काहिमि दाहिमि इत्यादि ॥३२॥

**सं ॥ ३३ ॥**

धातोः परो भविष्यति काले मेः स्थाने सं इति वा भवति ॥ रित्वाद् द्वित्वम् । होस्सं हविस्सं ॥ पक्षे होहिमि होहामि होस्सामि इत्यादि ॥३३॥

**त्विज्जालिङः ॥ ३४ ॥**

लिङ् सप्तम्यादेशात् जा इत्यस्मात्परः इकारः तु प्रयोक्तव्यः । होज्जा होज्जाइ भवेत् ॥ वाधिकारे पुनस्तुग्रहणादुत्तरत्र न विकल्पः ॥ ३४ ॥

**एकस्मिन् प्रथमादेर्विध्यादिषु दु सु मु ॥ ३५ ॥**

विध्यादिषु विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु वर्तमानानां प्रथमादेः प्रथमादिपुरुषाणामेकत्वे वर्तमानानां प्रत्ययानां स्थाने यथासंख्यं दु सु मु इत्यादेशाः स्युः । हसउ सा । हससु तुमं । हसामु अहं । पेच्छउ पेच्छसु पेच्छामु ॥ दकारोच्चारणं भाषान्तरार्थम् ॥ ३५ ॥

---

32. M भविष्यति काले for भविष्यति. 33. M om. the Sūtra. K सए; S सस् for the Sūtra. MT सं; K सए; S स for सं. After हसिस्सं MT add कित्तइस्सं. 34. KS होज्जइ होज्ज; M होज्जइ होज्ज for होज्जा होज्जाइ. B विकल्पः for न विकल्पः. 35. S एकस्तु for एकस्मिन् in the Sūtra. KM भवन्ति for स्युः. M हसउ सो for हसउ सा.

बहौ न्तु ह मो ॥ ३६ ॥

विध्यादिष्वर्थेषु विहितानां प्रथममध्यमोत्तमपुरुषाणां बहुत्वे वर्तमानानां प्रत्ययानां स्थाने यथासंख्यं न्तु ह मो इत्यादेशा भवन्ति । हसन्तु, हसन्तु हसेयुर्वा ॥ हसह, हसत हसेत वा ॥ हसामो, हसाम हसेम वा ॥ एवं तुवरन्तु तुवरह तुवरामो ॥ एवं सर्वधातुष्वप्युदाहार्यम् ॥ ३६ ॥

सोस्तु हि ॥ ३७ ॥

विध्यादिष्वर्थेषु सोर्मध्यमपुरुषैकवचनस्य स्थाने हि इत्यादेशः स्यात् तु । देहि देसु । होहि होसु ॥ ३७ ॥

लुगिज्जहीज्जस्विज्जेऽतः ॥ ३८ ॥

सोरित्यनुवर्तते त्विति च । अतः अकारात्परस्य सोः स्थाने लुक् इज्जहि इज्जसु इज्जे इति त्रयश्चादेशा भवन्ति तु ॥ हस हसिज्जइ हसिज्जसु हसिज्जे ॥ पक्षे हससु । अत इति किम् । होसु । ठाहि ॥ ३८ ॥

लड्लटोश्च जज्जारौ ॥ ३९ ॥

लड्लटोर्वर्तमानभविष्यतोश्चकाराद्विध्यादिषु च विहितस्य प्रत्ययस्य स्थाने ज ज्जा इत्येतौ रितौ तु भवतः॥ रित्वाद् द्वित्वम् । लट्—हसेज्ज हसेज्जा । पढेज्ज पढेज्जा । सुणेज्ज सुणेज्जा ॥ पक्षे हसइ । पढइ । सुणइ ॥ लट्— पढेज्ज पढेज्जा । सुणेज्ज सुणेज्जा ॥ पक्षे पढिहिइ । सुणिहिइ ॥ विध्यादिषु--हसेज्ज हसेज्जा, हसतु हसेद्रा॥ पक्षे हसउ ॥ एवं सर्वत्र पुरुषेषु वचनेषु च अन्येषामपि लकाराणामिच्छन्ति ॥ होज्ज होज्जा, भवति भवेत् भवतु अभवत् अभूत् बभूव भूयात् भविता भविष्यति अभविष्यद्वेत्यर्थः ॥३९॥

---

36. T om. एवं सर्वधातुष्वप्युदाहार्यम्. KMS ऊह्यम् for उदाहार्यम्. 37. KMS सेस्तु for सोस्तु in the Sūtra. KMS से: for सोः. S भवति तु for स्यात्तु. 38. K सेरित्यनुवर्तते; MS सेरिति वर्तते for सोरित्यनुवर्तते. KMS सेः for सोः. K त्रय आदेशा भवन्ति तु for त्रयश्चादेशा भवन्ति 39. M जर्जारु; S जल् जाल् for जर्जारौ in the Sūtra. KS सर्वपुरुषेषु for सर्वत्र पुरुषेषु. KM om. होज्ज होज्जा.

**मध्ये चाजन्तात् ॥ ४० ॥**

जर्जाराविव्यनुवर्तते । अजन्ताद्धातोः प्रकृतिप्रत्यययोर्मध्ये चकारात्प्रत्ययानां च स्थाने जर् जार् इत्येतौ भवतः लड्लृटोर्विध्यादिषु च । **होज्जइ होज्जाइ** । होज्ज होज्जा । होज्जहिमि होज्जाहिमि ॥ विध्यादिषु—**होज्जइ होज्जाइ** । होज्ज होज्जा । भवतु भवेद्वा ॥ पक्षे होइ ॥ अजन्तादिति किम् । हसेज्ज हसेज्जा । तुवरिज्ज तुवरिज्जा ॥ ४० ॥

**माणन्तौल् च लङः ॥ ४१ ॥**

लङः क्रियातिपत्तेः यौ तिप्तौ तत्स्थाने माण न्त इत्येतौ चकारात् जर्जारौ च भवतः ॥ लित्त्वान्न विकल्पः ॥ होमाणो होन्तो होज्ज होज्जा । अभविष्यदित्यर्थः ॥ ४१ ॥

**शतृशानचोः ॥ ४२ ॥**

माणन्तौ इत्यनुवर्तते । शतृ शानच् इत्येतयोः प्रत्यययोः स्थाने माण न्त इत्येतौ प्रत्येकं भवतः । शतृ—हसमाणो हसन्तो । शानच्—सहमाणो सहन्तो ॥ ४२ ॥

**स्त्रियामी च ॥ ४३ ॥**

स्त्रियां वर्तमानयोः शतृशानचोः स्थाने ईत्वं चकारान्माणन्तौ च भवतः । हसई हसमाणा हसन्ती ॥ वेवई वेवमाणा वेवन्ती ॥ ४३ ॥

---

40. S जल् जाल् इत्यनुवर्तते for जर्जाराविव्यनु°. After होज्जाहिमि KMT add होज्ज होज्जा होज्जहामि होज्जस्सामि होज्जस्सं होहिमि इत्यादि. KMST तुवरेज्ज तुवरेज्जा for तुवरिज्ज तुवरिज्जा. 41. B क्रियादिवृत्तेः for °तिपत्तेः. K जल्जालौ; M जर् जार् इति; S जल्जाल्; T जजार् for जर्जारौ. M om. यौ तिप्तौ तत्. M लित्वान्नि-त्यम्. S om. from होमाणो down to °त्यर्थः. After होन्तो M adds हसमाण हसंत हसेज्ज हसेज्जा अहसिष्यत्. 42. KST शतृशानचः for the Sūtra. KS om. Com. on this Sūtra. 43. KS om. the Sūtra and स्त्रियां in Com.

**घेत् तुंतव्यक्त्वासु ग्रहेः ॥ ४४ ॥**

तुंतव्यक्त्वाप्रत्ययेषु परतो ग्रहेर्धातोर्घेत् इति भवति। तुम्—घेत्तुं ॥ तव्य—घेत्तव्वं ॥ क्त्वा—घेत्तुआण घेत्तूण ॥ क्वचिन्न भवति। गहिउं। गेण्हिअ ॥ ४४ ॥

**अन्त्यस्य वचिमुचिरुदिश्रुभुजां डोत् ॥ ४५ ॥**

तुंतव्यक्त्वास्वित्यनुवर्तते। वचि मुचि रुदि श्रु भुजि इत्येतेषां धातूनामन्त्यस्य तुंतव्यक्त्वाप्रत्ययेषु ओत् इत्यादेशो डित् भवति ॥ वचि—वोत्तुं। वोत्तव्वं। वोत्तुआण वोत्तूण ॥ मुचि—मोत्तुं। मोत्तव्वं। मोत्तुआण। मोत्तूण ॥ रुदि—रोत्तुं। रोत्तव्वं। रोत्तुआण रोत्तूण ॥ श्रु—सोत्तुं। सोत्तव्वं। सोत्तुआण सोत्तूण ॥ भुजि--भोत्तुं। भोत्तव्वं। भोत्तुआण भोत्तूण ॥ ४५ ॥

**ता ट्ठो दृशः ॥ ४६ ॥**

अन्त्यस्येत्यनुवर्तते। दृशो धातोरन्त्यस्य तुंतव्यक्त्वासु परतः तेषामेव प्रत्ययानामादिना तकारेण सह द्विरुक्तष्टकारो भवति दट्ठुं। दट्ठव्वं। दट्ठुआण दट्ठूण ॥ ४६ ॥

**आ भूतभविष्यति च कृञः ॥ ४७ ॥**

कृञोऽन्त्यस्य आ इत्यादेशो भवति भूतभविष्यत्प्रत्यये, चकारात् तुंतव्यक्त्वासु च परतः। काहीअ, अकार्षीत् अकरोत् चकार वा ॥ काहिइ, करिष्यति कर्ता वा ॥ तुम्--काउं ॥ तव्य--काअव्वं ॥ क्त्वा--काउआण काऊण ॥ ४७ ॥

---

44. T गृह्धिधातुः for ग्रहेर्धातोः. MS वा भवति for भवति. T घेत्ताण for घेत्तूण. M om. गहिउं. S गिह्विउं for गहिउं. KMS om. गेण्हिअ; T गण्हिअ. 45. MS °क्त्वा इत्यनुवर्तते for °क्त्वास्वित्यनु°. After प्रत्ययेषु M adds परेषु. B om. from श्रु down to सोत्तूण. 46. T ठा for ट्ठो in the Sūtra. KM दृशेर्धातोः for दृशो धातोः. 47. KS काहि for काहीअ.

**नमोद्विजरुदां वः ॥ ४८ ॥**

नमतेः उद्विजतेः रुदेश्च अन्त्यस्य वकारो भवति । णवइ । उव्विवइ उव्वेइ । रुवइ रोवइ ॥ ४८ ॥

**चर् नृतिमदिव्रजाम् ॥ ४९ ॥**

नृत मद व्रज इत्येतेषां धातूनामन्त्यस्य चकारो भवति ॥ रित्वाद् द्वित्वम् ॥ णच्चइ । मच्चइ । वच्चइ ॥ ४९ ॥

**छर् गमिष्यमासाम् ॥ ५० ॥**

गम इष यम आस इत्येतेषामन्त्यस्य छो भवति ॥ रित्वाद् द्वित्वम् ॥ गच्छइ । इच्छइ । जच्छइ । अच्छइ ॥ ५० ॥

**रुधो न्धम्भौ ॥ ५१ ॥**

रुधेरन्त्यस्य न्ध म्भ इत्येतौ भवतः । रुन्धइ । रुम्भइ ॥ ५१ ॥

**युधबुधगृधक्रुधसिधमुहां च ज्झः ॥ ५२ ॥**

युध बुध गृध क्रुध सिध मुह इत्येतेषां चकाराद्रुधेश्चान्त्यस्य द्विरुक्तो झकारो भवति । जुज्झइ । बुज्झइ । गिज्झइ । कुज्झइ । सिज्झइ । मुज्झइ । रुज्झइ ॥ ५२ ॥

**जर् स्विदाम् ॥ ५३ ॥**

स्विदिप्रकाराणां धातूनामन्त्यस्य जो भवति ॥ रित्वाद् द्वित्वम् ॥ सिज्जइ ॥ सव्वङ्गसिरीए संपज्जइ, सर्वाङ्गश्रिया संपद्यते ॥ खिज्जइ ॥ बहुवचनं प्रयोगानुसरणार्थम् ॥ ५३ ॥

---

48. MT रोदितेः; S रुदितेः for रुदेः. T उप्पिइ उप्पेवो for उव्विवइ उव्वेइ. KS रवइ for रुवइ. 49. MT चर् नृतमदव्रजां for the Sūtra. S चल् for चर् in the Sūtra. M चकारो रिद् भवति for चकारो भवति. M om. रित्वाद् द्वित्वम्. 50. S छल्; T छरि for छर् in the Sūtra. T इत्येषां for इत्येतेषां. After इत्येतेषां K adds धातूनाम्. M छकारो रिद् भवति for छो भवति. M om. रित्वाद् द्वित्वम्. KT यच्छइ for जच्छइ. 51. S रुदो नन्तो for the Sūtra. 52. $T_1$ ग्रध for गृध in the Sūtra. $T_2$ द्रुहां for •मुहां in the Sūtra and Com. M झर् for ज्झः in the Sūtra. M झो for झकारो. 53. T जरि स्विदां for the Sūtra. S जल् for जर् in the Sūtra. M जो रिद् भवति for जो भवति. M om. रित्वाद् द्वित्वम्. K सव्वंगसिरिए for °सिरीए.

**छिदिभिदो न्दः ॥ ५४ ॥**

छिदिभिदोरन्त्यस्य न्द इत्यादेशो भवति । छिन्दइ । भिन्दइ ॥५४॥

**ढः कथिवर्धाम् ॥ ५५ ॥**

कथतेर्वर्धतेश्चान्त्यस्य ढत्वं भवति । कढइ । वड्ढइ ॥ बहुवचनाद् वृधेः कृतगुणस्य वर्धेश्चाविशेषेण ग्रहणम् ॥ ५५ ॥

**वेष्टः ॥ ५६ ॥**

ढ इति वर्तते । वेष्ट वेष्टने इत्यस्य धातोः 'कगटड' [ १·४·७७ ] इत्यादिना षलोपे टस्य ढो भवति । वेढइ । वेढिज्जइ ॥ ५६ ॥

**समुदो लर् ॥ ५७ ॥**

सम् उद् इत्युपसर्गाभ्यां परस्य वेष्टेरन्त्यस्य ल्कारो रित् भवति । संवेल्लइ । उव्वेल्लइ ॥ बहुलाधिकारादुतः परस्यापि वा ढः । उव्वेल्लइ ॥ उव्वेढइ ॥ ५७ ॥

**खादधावि लुक् ॥ ५८ ॥**

खादतौ धावतौ चान्त्यस्य लुग्भवति । खाइ खाअइ ॥ खाओ खाइओ॥ धाइ धाअइ ॥ धाओ धाइओ ॥ बहुलाधिकाराद्वर्तमानभविष्यद्विध्याद्येकवचन एव भवति । तेनेह न भवति । खादन्ति । धावन्ति ॥ कचित् 'धावइ पुरओ' इति च दृश्यते ॥ ५८ ॥

---

54. MT ण्ढः for न्दः in the Sūtra. and Com. 55. M ढर् कृषिवर्ध्योः; T ढः कथवर्धाम् for the Sūtra. S ठः for ढः in the Sūtra and Com. KM कड्ढइ for कढइ. M अविशेषग्रहणं for अविशेषेण ग्रहणम्. 56. S ठ इति for ढ इति. M अन्त्यस्य for टस्य. S वेडइ for वेढइ. 57. M रत्; S ल्ल् for लर् in the Sūtra. MS लिद् for रिद्. S om. वा. S डः for ढः. 58. M खादधाव्योर्लुक् for the Sūtra. M खादतेर्धावतेश्च for खादतौ धावतौ च. K om. खाइओ. After खाअइ MT add खाहिइ खाउ. After धाअइ MT add धाहिइ धाउ. MT क्वचित्तु for क्वचित्.

**रः सृजि ॥ ५९ ॥**

सृजिधातावन्त्यस्य रत्वं भवति । विसरइ । ओसरइ । ओसरामि ॥ ॥ ५९ ॥

**डः सीदपति ॥ ६० ॥**

सीदतौ पततौ च अन्त्यस्य डत्वं भवति । सडइ पडइ ॥ ६० ॥

**मीलेः प्रादेर्द्वे तु ॥ ६१ ॥**

प्रादेरुपसर्गात्परस्य मीलेरन्त्यस्य द्वे रूपे तु भवतः । पमिल्लइ। पमीलइ। निमिल्लइ निमीलइ । संमिल्लइ । संमीलइ । उम्मिल्लइ उम्मीलइ ॥ प्रादेरिति किम् । मीलइ ॥ ६१ ॥

**चलस्फुटे ॥ ६२ ॥**

द्वे इत्यनुवर्तते । चलतौ स्फुटतौ च अन्त्यस्य द्वे रूपे तु भवतः। चल्लइ चलइ । फुट्टइ फुडइ ॥ ६२ ॥

**शकगे ॥ ६३ ॥**

शकादिषु धातुष्वन्त्यस्य द्वे रूपे भवतः ॥ योगविभागान्नित्यम् ॥ शक—सक्कइ । मग—मग्गइ । लग—लग्गइ । सिच—सिच्चइ । अट—अट्टइ । लुट—लुट्टइ । त्रुट—तुट्टइ । कुप—कुप्पइ । जिम—जिम्मइ । णश—णस्सइ । इत्यादि ॥ ६३ ॥

---

59. T नीसरइ वोसरइ वोसिरामि for विसरइ ओसरइ ओसिरामि. 60. M डः सदपति for the Sūtra. M सादतेः पततेश्च for सीदतौ पततौ च. 61. S मिलेः for मीलेः in the Sūtra, Com. and illustrations. T om. तु in the Sūtra. M पमलइ for पमिल्लइ. M om. संमिल्लइ संमीलइ. 62. MST चलस्फुटि for the Sūtra. M द्वेतिवर्तते for द्वे इत्यनुवर्तते. M द्वित्वं भवति for द्वे रूपे भवतः. B स्फुटितौ for स्फुटतौ. BM फुड्डइ for फुट्टइ. 63. M द्वित्वं भवति द्वे for रूपे भवतः. KS तस तस्सइ for णश-णस्सइ. S वच वंचइ for सिच सिञ्चइ. T कुट-कुट्टइ for त्रुट तुट्टइ. T जम-जम्मइ for जिम जिम्मइ.

**उवर्णस्यावः ॥ ६४ ॥**

धातोरन्त्यस्य उवर्णस्य अव इत्यादेशो भवति । ह्नुङ्--निन्हवइ । च्यु--चवइ । रु--रवइ । कु--कवइ । सु--सवइ । पसवइ ॥ ६४ ॥

**य्वोरेङ् ॥ ६५ ॥**

इश्च उश्च युः तस्य । तयोर्धात्वोरिवर्णोवर्णयोः एङ् एदोतौ यथासंख्यं भवतः । इवर्णस्य एकारः, उवर्णस्य ओकारः। जेऊण जित्वा । नेऊण नीत्वा। नेइ नयति । उड्डेइ उड्डयति । सोऊण श्रुत्वा ॥ कचिन्न भवति । नीओ । उड्डीणो ॥ ६५ ॥

**अर उः ॥ ६६ ॥**

ऋवर्णस्य धातोरन्त्यस्य अर इत्यादेशो भवति । करइ । धरइ । वरइ । सरइ । भरइ । मरइ । तरइ । जरइ ॥ ६६ ॥

**अरि वृषाम् ॥ ६७॥**

वृषप्रकाराणां धातूनामृवर्णस्य अरि इत्यादेशो भवति । वृष--वरिसइ॥ मृष--मरिसइ ॥ कृष- करिसइ ॥ हृष--हरिसइ ॥ बहुवचनं प्रयोगानुसरणार्थम ॥ ६७ ॥

**रुषगेऽचो दिः ॥ ६८ ॥**

रुषादिधातुष्वचो दीर्घो भवति । रुष--रूसइ ॥ शुष--सूसइ ॥ दुष--दूसइ ॥ तुष--तूसइ ॥ पुष--पूसइ ॥ शिष--सीसइ ॥ इत्यादि ॥ ६८ ॥

---

64. T उवर्णस्य वा for the Sūtra. 65. M योरेदोत् for the Sūtra. M om. एङ्. M om इवर्णस्य एकारः, उवर्णस्य ओकारः. T ओ for ओकारः. S चेऊग चेत्वा for जेऊग जित्वा. T नेंति उड्डेंति for नयति उड्डयति. 66. T अर इ. for the Sūtra. T रीवर्णस्य for ऋवर्णस्य. 68. MS रुषगे दिः; T रुषगे चोदितः for the Sūtra. K दिर्दीर्घो for दीर्घो.

**हलोऽक् ॥ ६९ ॥**

हलन्ताद्धातोः परः अगागमो भवति ॥ ककारोऽन्तविध्यर्थः ॥ हसइ । भमइ । रमइ । गच्छइ । भुज्जइ । उवसमइ । पावइ । सिञ्चइ । रुन्धइ । मुसइ । वहइ । सहइ ॥ शस्प्रभृतीनां प्रायः प्रयोगो न भवति ॥ ६९ ॥

**त्वनतः ॥ ७० ॥**

अगिति वर्तते । अकारान्तवर्जिताद्धातोः परः अगागमो भवति तु । पाअइ पाइ । ठाअइ ठाइ । वाअइ वाइ । धाअइ धाइ । जाअइ जाइ । झाअइ झाइ । भाअइ भाइ, बिभेति भाति वा । जम्भाअइ जम्भाइ, जम्भते । उव्वाअइ उव्वाइ, उद्वाति । मिलाअइ मिलाइ, म्लायते । विक्केअइ विक्केइ, विक्रीणीते ॥ अनत इति किम् । चिइच्छइ चिकित्सते ॥ ७० ॥

**अचोऽचाम् ॥ ७१ ॥**

धातुषु अचां स्थाने अचो बहुलं भवन्ति । हवइ हिवइ । चिणइ चुणइ । सद्दहणं सद्दहाणं । धावइ धुवइ । रुवइ रोवइ ॥ क्वचिन्नित्यम् । जेइ । चेइ । देइ । लेइ । विहेइ । नासइ ॥ ७१ ॥

**णो ह्रश्च चिजिपूश्रुधूस्तुहुलूभ्यः ॥ ७२ ॥**

चि जि पू श्रु धू स्तु हु लू इत्येतेभ्यः परो ण इत्यागमो भवति, तत्संनियोगेन ह्रश्च, दीर्घस्य च ह्रस्वः । चिणइ । जिणइ । पुणइ । सुणइ । धुणइ । थुणइ । हुणइ । लुणइ ॥ बहुलाधिकारात् क्वचिद्विकल्पः ॥ उच्चेणइ उच्चेइ । जिणिऊण जेऊण । जिणइ जेणइ । सुणिऊण सोऊण ॥ ७२ ॥

---

69. S om. भुञ्जइ. T भवइ for वहइ. 70. MT अकारान्तवर्जितादजन्ताद्धातोः for °वर्जिताद्धातोः. S om. तु T om. ठाअइ ठाइ. K काअइ काइ for झाअइ झाइ. KS विक्कोअइ विक्कोइ for विक्केअइ विक्केइ. T om. from अनत इति down to स्थाने under the next Sūtra. After चिइच्छइ M adds जुउच्छइ. M om. चिकित्सते. 71. BS धवइ for धावइ. ST om. जेइ चेइ. T om. नासइ. K देहि लेहि for देइ लेइ. 72. MT इत्येभ्यः for इत्येतेभ्यः. ST °संनियोगे for °योगेन. M उच्चिणइ for उच्चेणइ. T om. from पुणइ down to जेणइ. K जअइ for जेणइ. S om. from थुणइ down to the end of the Sūtra.

**भावकर्मणि तु वर्यग्लुक् च ॥ ७३ ॥**

भावे कर्मणि च वर्तमानेभ्यः चिजिपूश्रुधूस्तुहुलूभ्यः परो वकारागमो भवति तु । तत्संनियोगेन यक्प्रत्ययस्य लुक् ॥ रित्वाद् द्वित्वम् ॥ चिव्वइ चिणिज्जइ । जिव्वइ जिणिज्जइ । पुव्वइ पुणिज्जइ । सुव्वइ सुणिज्जइ । धुव्वइ धुणिज्जइ । एवं भविष्यति चिव्वहिइ चिणिज्जहिइ । इत्यादि ॥७३॥

**मश्चेः ॥ ७४ ॥**

भावकर्मणीत्यनुवर्तते । चिनोतेः परो भावकर्मणि मागमो रिद् भवति । तत्संनियोगेन यग्लुक् च । चिम्मइ । पक्षे चिव्वइ चिणिज्जइ ॥ भविष्यति– चिम्महिइ, चिव्वहिइ, चिणिज्जहिइ ॥ ७४ ॥

**अन्त्यस्य हनखनोः ॥ ७५ ॥**

मरिति वर्तते । हन खन इत्येतयोः अन्त्यस्य भावकर्मणि मागमो रिद् भवति तु ।तत्संनियोगेन यग्लुक् च । हम्मइ हणिज्जइ । खम्मइ खणिज्जइ॥ भविष्यति–हम्मिहिइ हणिज्जहिइ । खम्मिहिइ खणिज्जहिइ ॥ बहुलाधिकाराद् हन्तेः कर्तर्यपि । हम्मइ, हन्तीत्यर्थः॥ क्वचिन्न भवति । हन्तव्वं । हन्तूण । हओ ॥७५॥

**दुहलिहवहरुहां भरत उच्च ॥ ७६ ॥**

दुह लिह वह रुह इत्येषामन्त्यस्य भकारो रिद् भवति तु । तत्संनियोगेन यग्लुक् च । वहेरतः उकारश्च । दुब्भइ दुहिज्जइ । लिब्भइ लिहिज्जइ । वब्भइ वहिज्जइ । रुब्भइ रुहिज्जइ ॥ भविष्यति–दुब्भिहिइ दुहिज्जहिइ । इत्यादि ॥ ७६ ॥

---

73. S om. the Sūtra. K वर्माबकर्मणि तु यग्लुक्; M वर्भावकर्मणि यग्लुक् च for the Sūtra. T यत् लुक् for यग्लुक् in the Sūtra and Com. here and elsewhere under the following Sūtras upto Sūtra 90. S om. भावे. K om. च. M om. from तत्संनियोगे down to पुणिज्जइ. T तत्संनियो for तत्संनियोगेन. 74. T मञ्चोः for the Sūtra. MST तत्संनियोगे for °योगेन under this Sūtra and elsewhere up to Sūtra 82. KMS चिम्मिहिइ; T चिम्मिहइ for चिम्महिइ. KM om. चिव्वहिइ. 75. K अनुवर्तते for वर्तते. MS om. रिद्. After भवति तु K adds रित्वाद् द्वित्वम्. 76. M हर् for भर् in the Sūtra. KMS वहतेः for वहेः. K उकारश्च for उकारश्च.

**दहेर्झर् ॥ ७७ ॥**

अन्त्यस्येत्यनुवर्तते । दहेरन्त्यस्य भावकर्मणि झकारो रिद् भवति तु । तत्संनियोगेन यग्लुक् च । डज्झइ डहिज्जइ ॥ भविष्यति—डज्झिहिइ डहिज्जहिइ ॥ ७७ ॥

**बन्धो न्धः ॥ ७८ ॥**

झरित्यनुवर्तते । बन्धेर्धातोः न्ध इत्यस्य भावकर्मणि झर् इत्यादेशो भवति तु । तत्संनियोगेन यग्लुक् च । बज्झइ बन्धिज्जइ ॥ भविष्यति--बन्धिहिइ बन्धिज्जहिइ ॥ ७८ ॥

**रुध उपसमनोः ॥ ७९ ॥**

उप सम् अनु इत्येतेभ्यः परस्य रुन्धेरन्त्यस्य भावकर्मणि झर् भवति तु । तत्संनियोगेन यग्लुक् च । उवरुज्झइ । संरुज्झइ । अणुरुज्झइ ॥ पक्षे उवरुन्धिज्जइ । संरुन्धिज्जइ । अणुरुन्धिज्जइ ॥ भविष्यति—उवरुज्झहिइ । संरुज्झहिइ । इत्यादि ॥ ७९ ॥

**द्वे गमिगे ॥ ८० ॥**

गमादौ धातोरन्त्यस्य भावकर्मणि द्वे रूपे भवतः । तत्संनियोगेन यक्प्रत्ययस्य लुक् च । गम—गम्मइ गमिज्जइ ॥ हस—हस्सइ हसिज्जइ ॥ भण—भण्णइ भणिज्जइ ॥ लुभ—लुब्भइ लुभिज्जइ ॥ कथ—कत्थइ कहिज्जइ ॥ कुप—कुप्पइ कुविज्जइ ॥ भुज—भुज्जइ भुजिज्जइ ॥ रुद—रुव्वइ रुविज्जइ ॥ 'नमोद्विजरुदाम्' [२·४·४८] इति कृतवकारादेशो रुदिरत्र पठ्यते ॥ भविष्यति—गम्मिहिइ गम्मिज्जहिइ । इत्यादि ॥ ८० ॥

---

77. S झल् for झर् in the Sūtra. 78. KMS झरिति भवति for झर् इत्यादेशो भवति. K बज्झिहिइ बंधिज्जिहिइ for बन्धिहिइ बन्धिज्जहिइ. 79. KM रुधेः. for रुन्धेः. K उवरुज्झिहिइ for उवरुज्झहिइ. KS om. संरुज्झहिइ. 80. KS om. लुब्भइ लुभिज्जइ. M लुंभइ for लुब्भइ. BK om. पठ्यते.

**ईर हृकृतॄज्राम् ॥ ८१ ॥**

हृञ् कृञ् तॄ ज्रॄ इत्येतेषामन्त्यस्य भावकर्मणि ईर इत्यादेशो भवति तु। तत्संनियोगेन यग्लुक् च। हीरइ हरिज्जइ। कीरइ करिज्जइ। तीरइ तरिज्जइ। जीरइ जरिज्जइ॥ ८१॥

**अर्जेर्विढप्पः ॥ ८२ ॥**

अन्त्यस्येति निवृत्तम्। अर्जेर्विढप्प इत्यादेशो भावकर्मणि भवति तु। तत्संनियोगेन यग्लुक् च। विढप्पइ। पक्षे अज्जिज्जइ विढप्पिज्जइ॥ ८२॥

**आरभ आढप्पः ॥ ८३ ॥**

आरभतेर्भावकर्मणि आढप्प इत्यादेशो भवति तु, यग्लुक् च। आढप्पइ। पक्षे आरभिज्जइ आढप्पिज्जइ॥ ८३॥

**णप्पणज्जौ ज्ञः ॥ ८४ ॥**

जानातेर्भावकर्मणि णप्प णज्ज इत्यादेशौ तु भवत, यग्लुक् च। णप्पइ। णज्जइ॥ पक्षे जाणिज्जइ। मुणिज्जइ॥ 'ज्ञम्नोः' [१·४·३७] इति णत्वे णाइज्जइ॥ नञ्पूर्वस्य अणाइज्जइ॥ ८४॥

**सिप्पः सिचस्निहोः ॥ ८५ ॥**

सिञ्चतेः स्निह्यतेश्च भावकर्मणि सिप्प इत्यादेशो भवति तु, यग्लुक् च। सिप्पइ सिच्यते स्निह्यते वा॥ पक्षे सिञ्चिज्जइ। णेहिज्जइ॥ ८५॥

**वाहिप्पो व्याहृः ॥ ८६ ॥**

व्याहरतेर्भावकर्मणि वाहिप्प इत्यादेशो भवति तु, यग्लुक् च। वाहिप्पइ॥ पक्षे वाहरिज्जइ॥ ८६॥

---

81. K हृञ्कृञ् for हृकृ in the Sūtra. S हिरज्जइ for हरिज्जइ. K जिरिज्जइ for जरिज्जइ. 82. BK विडप्पः for विढप्पः in the Sūtra. T om. विढप्पिज्जइ. K विडविज्जइ for विढप्पिज्जइ. 83. MS आडप्पः for आढप्पः in the Sūtra and Com. KS आरमेः for आरभतेः. T आरंभिज्जइ आढविज्जइ for आरभिज्जइ आढप्पिज्जइ. 84. T om. तु. T जणिज्जइ for मुणिज्जइ. 85. M om. the Sūtra and Com., but gives illustrations. KMST om. पक्षे सिञ्चिज्जइ णेहिज्जइ. B णिहृहिज्जइ for णेहिज्जइ 86. KS वाहिप्पिज्जइ for पक्षे वाहरिज्जइ T om. पक्षे.

**ग्रहेर्घेप्पः ॥ ८७ ॥**

ग्रहेर्भावकर्मणि घेप्प इत्यादेशो भवति तु, यग्लुक् च। घेप्पइ ॥ पक्षे गेण्हिज्जइ ॥ ८७ ॥

**छिप्पः स्पृशतेः ॥ ८८ ॥**

स्पृशतेर्भावकर्मणि छिप्प इत्यादेशो भवति तु, यग्लुक् च। छिप्पइ ॥ पक्षे छिविज्जइ ॥ ८८ ॥

**दीसल् दृशेः ॥ ८९ ॥**

दृशेर्भावकर्मणि दीस इत्यादेशो लिद् भवति, यग्लुक् च। दीसइ ॥ ॥ ८९ ॥

**वचेरुञ्चः ॥ ९० ॥**

वचेर्भावकर्मणि उञ्च इत्यादेशो भवति तु, यग्लुक् च। उञ्चइ ॥ पक्षे वइज्जइ ॥ ९० ॥

**ईअइज्जौ यक् ॥ ९१ ॥**

अपवादनिमित्तोऽयं विधिः। भावकर्मणि विहितो यो यक्प्रत्ययः स ईअ इज्ज इत्यादेशावापद्यते। हसीअइ हसिज्जइ। हसीअन्तो हसिज्जन्तो। हसीअमाणो हसिज्जमाणो ॥ पढीअइ पढिज्जइ। होईअइ होइज्जइ ॥ बहुलाधिकारात् क्वचिद् यगपि विकल्पेन भवति। तेण लहिज्ज। तेण लहिज्जेज्ज ॥ मए णवेज्ज। मए णविज्जेज्ज ॥ तेण अच्छिज्ज। तेण अच्छिज्जेज्ज। तेण अच्छीअइ ॥ ९१ ॥

---

87. KST om. पक्षे. 88. T चिप्पः for छिप्पः in the Sūtra, Com.and illustrations. KS om. पक्षे. KMS छिप्पिज्जइ for छिविज्जइ. 90. K पचेरुर्वञ्चं; M पचेः पुंचः; S पचेल् श्रंचः; T वचेर्वुञ्च for the Sūtra. KMS पचतेः for वचेः. K उञ्च; M पुंच; T वुञ्च for उञ्च. K उञ्चइ; M पुंचइ; T वुञ्चइ for उञ्चइ. KMST om. पक्षे वइज्जइ. 91. Bp इअइज्जौ यक्; M ईयज्जौ यक् for the Sūtra. Bp KS अपवादनिर्मुक्तः; M °वाद-विनिर्मुक्तः for अपवादनिमित्तः. B पटीअइ पटिज्जइ; K पढिअइ पढिज्जइ for पढीअइ पढिज्जइ. K om. मए णवेज्ज.

**स्पृहदृशोः सिहदूमौ णिचोः ॥ ९२ ॥**

णिजन्तयोः स्पृहदृशो धात्वोः सिह दूम इत्यादेशौ यथासंख्यं भवतः । सिहइ । दूमइ ॥ ९२ ॥

**निवृपतोर्णिहोडो वा ॥ ९३ ॥**

णिचोरित्यनुवर्तते । निपूर्वस्य वृञः पतेश्च धात्वोर्णिजन्तयोः स्थाने णिहोड इत्यादेशो वा भवति । णिहोडइ निवारयति पातयति वा । पक्षे णिवारेइ । पाडेइ ॥ ९३ ॥

**धवलोद्घटोर्दुमोग्गौ ॥ ९४ ॥**

वेत्यनुवर्तते । धवलयतेरुत्पूर्वस्य घटयतेश्च णिजन्तयोर्दुम उग्ग इत्यादेशौ यथासंख्यं भवतो वा । दुमइ । उग्गइ ॥ पक्षे धवलेइ । उग्घाडेइ ॥ 'अचोऽचाम्' [ २·४·७१ ] इति दुमोऽत्वे दमिअं धवलिअं ॥ ९४ ॥

**भ्रमवेष्टयोस्तालिअण्टपरिआलौ ॥ ९५ ॥**

भ्रमयतिवेष्टयन्योर्णिजन्तयोः तालिअण्ट परिआल इत्येतौ यथासंख्यं वा भवतः । तालिअण्टइ ॥ पक्षे भमाडइ । भमाडेइ । भामइ । भामावइ । भामावेइ ॥ वेष्टेः—परिआलइ ॥ पक्षे । वेढइ ॥ ९५ ॥

**रावो रञ्जयतेः ॥ ९६ ॥**

रञ्जयतेर्णिजन्तस्य राव इत्यादेशो वा भवति । रावेइ । पक्षे रञ्जेइ ॥९६॥

---

92. Bp स्पृहधूञोः; M स्पृहदशोः in the Sūtra, Com. and illustrations; T स्पृहदशोः in the Sūtra and Com. for स्पृहदृशोः in the Sūtra. S धूमेइ for दूमइ. 93. M निवृञ्धोर्णिवो धो वा for the Sūtra. 94. MS वा भवतः यथासंख्यं for यथासंख्यं वा भवतः. S om. from दुमइ down to the end of the Sūtra. M दुम्मइ; T दुग्गइ for दुमइ. T दुमेरित्वे for दुमोऽत्वे. T उद्दमिअं for दमिअं. 95. S om. the Sūtra. KM इत्यादेशौ for इत्येतौ. T भमडेइ for भमाडेइ. KT भमावइ भमावेइ for भामावइ भामावेइ. K वरिआलइ वरिआलइ वेडेइ for परिआलइ॥ पक्षे वेढइ. 96. T om. वा. MST om. पक्षे.

**तुलिडोल्योरोहामरक्खोलौ ॥ ९७ ॥**

णिजन्तयोः तुलयतिदोलयत्योश्च नामधात्वोर्यथासंख्यम् ओहाम रक्खोल इत्येतौ वा भवतः । ओहामइ । रक्खोलइ । पक्षे तुलइ ॥ डोलइ ॥ ९७ ॥

**आसंघः संभावेः ॥ ९८ ॥**

संभावयतेर्णिजन्तस्य आसंघ इति वा भवति । आसंघइ ॥ पक्षे संभावेइ, संभावयति ॥ ९८ ॥

**अर्पेरल्लिवपणामचच्चुप्पाः ॥ ९९ ॥**

णिजन्तस्यार्पयतेः अल्लिव पणाम चच्चुप्प इति त्रय आदेशा वा भवन्ति । अल्लिवइ । पणामइ । चच्चुप्पइ ॥ पक्षे अप्पेइ ओप्पेइ ॥ ९९ ॥

**गुलुगुञ्छोत्थङ्घोव्वेल्लोल्लाला उन्नमेः ॥ १०० ॥**

णिजन्तस्य नमेरुत्पूर्वस्य गुलुगुञ्छ उत्थङ्घ उव्वेल्ल उल्लाल इति चत्वार आदेशा भवन्ति तु । गुलुगुञ्छइ । उत्थङ्घइ उव्वेल्लइ उल्लालइ ॥ पक्षे उण्णवेइ ॥ १०० ॥

**प्रकाशेर्णुव्वः ॥ १०१ ॥**

णिजन्तस्य प्रकाशेर्णुव्व इति वा भवति । णुव्वइ ॥ पक्षे पआसेइ ॥ ॥ १०१ ॥

**णिहुवः कमेः ॥ १०२ ॥**

कमेः स्वार्थे णिजन्तस्य णिहुव इत्यादेशो वा भवति । णिहुवइ ॥ पक्षे कामेइ ॥ १०२ ॥

---

97. M तुलिदोलो°; S तुरिदोलो°; $T_1$ तुलिरोलो°; $T_2$ तुलिलोरो° for तुलिडोल्यो° in the Sūtra. M तुलयतेदोलयतेश्च for तुलयतिदोलयत्योश्च. S om. पक्षे तुलइ. T तोलइ for डोलइ. 98. K इत्यादेशो वा; M इत्यादेशो for इति वा. K om. संभावेइ; MS om. पक्षे संभावेइ. 99. $MT_2$ °चुञ्चुप्पाः for चच्चुप्पाः in the Sūtra and Com. S °चंचप्पाः; $T_1$ °चंचुप्पाः in the Sūtra. M om. वा. 100. S गुलुगुंद°; $T_1$ गुलगुंच° for गुलुगुञ्छ° in the Sūtra. K नमयतेः for नमेः. M om. तु. KS उन्नावइ; T उन्नामइ for उण्णवेइ. 101. T णुप्पः for णुव्वः in the Sūtra and Com. ST om. पक्षे. 102. M भुवः कमेः; $T_1$ णिभुवः कामे for the Sūtra. $T_2$ कामेः for कमेः in the Sūtra. MS om. पक्षे. T कमेइ for कामेइ.

**नशेर्विप्पगालनासवपलावहारवविउडाः ॥ १०३ ॥**

नाशयतेर्णिजन्तस्य विप्पगाल नासव पलाव हारव विउड इति पञ्चा-देशा वा भवन्ति । विप्पगालइ । नासवइ । पलावइ । हारवइ । विउडइ ॥ पक्षे णासेइ ॥ १०३ ॥

**वल आरोपे ॥ १०४ ॥**

णिजन्तस्यारोपेर्वल इत्यादेशो वा भवति । वलइ ॥ पक्षे आरोवेइ ॥ ॥ १०४ ॥

**विरेचेरोल्लुङ्डोल्लुङ्डपल्लत्थाः ॥ १०५ ॥**

विरेचयतेर्णिजन्तस्य ओल्लुङ्ड उल्लुङ्ड पल्लत्थ इति त्रय आदेशा वा भवन्ति । ओल्लुङ्डइ । उल्लुङ्डइ । पल्लत्थइ ॥ पक्षे विरेअइ ॥ १०५ ॥

**कम्पेर्विच्छोलः ॥ १०६ ॥**

कम्पयतेर्णिजन्तस्य विच्छोल इति वा भवति । विच्छोलइ ॥ पक्षे कम्पेइ ॥ १०६ ॥

**रोमन्थेरोग्गालवग्गालौ ॥ १०७ ॥**

रोमन्थेर्नामधातोर्णिजन्तस्य ओग्गाल वग्गाल इत्यादेशौ वा भवतः । ओग्गालइ । वग्गालइ ॥ पक्षे रोमन्थइ ॥ १०७ ॥

**प्लावेरोव्वालपव्वालौ ॥ १०८ ॥**

प्लावयतेर्णिजन्तस्य ओव्वाल पव्वाल इत्यादेशौ वा भवतः । ओव्वालइ । पव्वालइ ॥ पक्षे पावेइ ॥ १०८ ॥

---

103. T om. पक्षे. 104. S आलोपे; T आलोपो for आरोपेः in the Sūtra. S आलोपेः for आरोपेः. KMT om. पक्षे. M om. आरोवेइ. 105. M om. the Sūtra and Com. upto णिजन्तस्य. T ओल्लुंडोल्लुंड° in the Sūtra and Com. T om. पक्षे. 107. MS om. पक्षे. T om. पक्षे. T om. पक्षे रोमन्थेइ. 108. S प्लावेः; T प्लवयतेः for प्लावयतेः. ST om. पक्षे.

**मिश्रेर्मीसालमेलवौ ॥ १०९ ॥**

मिश्रयतेर्णिजन्तस्य मीसाल मेलव इत्यादेशौ वा भवतः । मीसालइ । मेलवइ ॥ पक्षे मीसेइ ॥ १०९ ॥

**छादेर्नूमनुमोव्वालडक्कपव्वालसंतुमाः ॥ ११० ॥**

छादयतेर्णिजन्तस्य नूम नुम उव्वाल डक्क पव्वाल संतुम इति षडादेशा वा भवन्ति । नूमइ नुमइ ॥ णत्वे णूमइ णुमइ ॥ उव्वालेइ । डक्केइ । पव्वालेइ । संतुमइ ॥ पक्षे छाएइ ॥ ११० ॥

**अच्चुक्कवोक्कौ विज्ञापेः ॥ १११ ॥**

विज्ञापेर्णिजन्तस्य अच्चुक्क वोक्क इत्यादेशौ वा भवतः । अच्चुक्कइ वोक्कइ ॥ पक्षे विण्णावेइ ॥ १११ ॥

**परिवाडो घटेः ॥ ११२ ॥**

घटयतेर्णिजन्तस्य परिवाड इत्यादेशो वा भवति । परिवाडेइ ॥ पक्षे घडेइ ॥ ११२ ॥

**दृशेर्दावदक्खवदंसाः ॥ ११३ ॥**

दर्शयतेर्णिजन्तस्य दाव दक्खव दंस इति त्रय आदेशा वा भवन्ति । दावइ । दक्खवइ । दंसइ ॥ पक्षे दरिसइ ॥ ११३ ॥

**प्रस्थापेः पेट्ठवपेड्डवौ ॥ ११४ ॥**

प्रस्थापयतेर्णिजन्तस्य पेट्ठव पेड्डव इत्यादेशौ वा भवतः । पेट्ठवइ । पेड्डवइ ॥ पक्षे पट्ठावेइ ॥ ११४ ॥

---

109. Bp KS विलास°; M वालास° for मीसाल in the Sūtra and Com. KS विलासइ for मीमालइ. T om. पक्षे. KST मिस्सेइ for मीसेइ. 110. $T_2$ °ढक्क° for डक्क in the Sūtra. KS T om. पक्षे. BT छअइ for छाएइ. 111. KMS विज्ञतेः for विज्ञापेः in the Sūtra and Com. T अपुक्कपोक्कौ for अच्चुक्कवोक्कौ in the Sūtra, Com. and illustrations. KMST om. पक्षे. B विण्णावेइ; T विण्णवइ for विण्णावेइ. 112. T परिवाढो for परिवाडो in the Sūtra, Com. and illustrations. T om. पक्षे. T घटेइ for घडेइ. 113. T °दस्साः in the Sūtra and Com. T om. पक्षे. 114. M पेड्ढव°; T पेण्डव° for पेड्डव° in the Sūtra, Com. and illustrations. KS पट्ठावइ for पट्ठावेइ.

**यापेर्जवः ॥ ११५ ॥**

यापयतेर्णिजन्तस्य जव इत्यादेशो वा भवति । जवइ ॥ पक्षे जावेइ ॥ ॥ ११५ ॥

**विकोशेः पक्खोडः ॥ ११६ ॥**

विकोशयतेर्नामधातोर्णिजन्तस्य पक्खोड इत्यादेशो वा भवति । पक्खोडइ ॥ पक्षे विओसेइ ॥ ११६ ॥

**गुण्ठ उध्दूलेः ॥ ११७ ॥**

उध्दूलयतेर्णिजन्तस्य गुण्ठ इत्यादेशो वा भवति । गुण्ठइ ॥ पक्षे उध्दूलेइ ॥ ११७ ॥

**तडेराहोडविहोडौ ॥ ११८ ॥**

ताडयतेर्णिजन्तस्य आहोड विहोड इत्यादेशौ वा भवतः । आहोडइ । विहोडइ ॥ पक्षे ताडेइ ॥ ११८ ॥

**ह्लादेरवअच्छलणिचश्च ॥ ११९ ॥**

ह्लादयतेर्णिजन्तस्याणिजन्तस्य च अवअच्छ इत्यादेशो लिद् भवति । अवअच्छइ, ह्लादते ह्लादयति वा ॥ ११९ ॥

**निर्मेर्निम्मवनिम्माणौ ॥ १२० ॥**

निर् पूर्वस्य मिमीतेर्धातोः निम्मव निम्माण इत्यादेशौ वा भवतः । निम्मवइ । निम्माणइ ॥ 'आदेस्तु' [ १·३·५३ ] इति णत्वे णिम्मवइ । णिम्माणइ ॥ पक्षे णिम्मइ ॥ १२० ॥

---

115. KMST om. पक्षे. T जावइ for जावेइ. 116. T विक्रोशेः for विकोशेः in the Sūtra. T विक्रोशयतेः for विकोशयतेः. KMST om. पक्षे here and also elsewhere promiscuously. The variants are no longer recorded. 117. K गुट्ठइ for गुण्ठइ. K उद्धूलइ; T उद्धूलइ for उद्धूलेइ. 118. T om. पक्षे ताडेइ. 120. S निर्मोः; T निम्मोः for निर्मेः in the Sūtra. T om. णिम्माणइ. KST om. पक्षे णिम्मइ.

**आल्लीङोल्लिः ॥ १२१ ॥**

आङ्पूर्वस्य लीयतेः अल्लि इत्यादेशो भवति । अल्लिइ । अल्लिअइ ॥ अल्लीणो ॥ १२१ ॥

**क्रियः कीणः ॥ १२२ ॥**

क्रीणातेः कीण इत्यादेशो भवति । कीणइ ॥ १२२ ॥

**केर् च वेः ॥ १२३ ॥**

वीत्युपसर्गात्परस्य क्रीणातेः केर् इति भवति । चकारात् कीणश्च ॥ रित्त्वाद् द्वित्वम् ॥ विक्केइ । विकीणइ ॥ १२३ ॥

**स्त्यः समः खा ॥ १२४ ॥**

स्त्यै ष्ट्यै शब्दसंघातयोः इत्यस्य स्त्यायतेः संपूर्वस्य खा इत्यादेशो भवति । संखाइ । संखाअइ । संखाअं ॥ १२४ ॥

**ध्मो धुमोदः ॥ १२५ ॥**

ध्मा शब्दाग्निसंयोगयोः इत्यस्य धातोः उदः परस्य धुमा इत्यादेशो भवति । उद्धुमाइ ॥ १२५ ॥

**स्थष्ठकुकुरौ ॥ १२६ ॥**

उदः परस्य ष्ठा गतिनिवृत्तौ इत्यस्य धातोः ठ कुकुर इत्यादेशौ भवतः । उट्ठइ । उक्कुरइ ॥ १२६ ॥

---

121. T आल्लीङोऽल्ली for the Sūtra. M अल्ली for अल्लिः in the Sūtra and Com. T अल्लं for अल्लि. MT अल्लीइ अल्लीअइ for अल्लिइ अल्लिअइ. B आल्लिणो for अल्लीणो. 122. T क्रीयः for क्रियः in the Sūtra. MS किणः in the Sūtra, Com. and illustrations. 123. T om. the Sūtra and Com.

**निरप्पथक्कठाचिट्ठाः ॥ १२७ ॥**

स्थ इत्यनुवर्तते। तिष्ठतेः निरप्प थक्क ठा चिट्ठा इति चत्वार आदेशा भवन्ति। निरप्पइ॥ णत्वे णिरप्पइ॥ थक्कइ। ठाइ। चिट्ठाइ। ठाणं। पट्ठाओ। उट्ठाओ। पट्ठाविओ। उट्ठाविओ। चिट्ठिऊण॥ बहुलाधिकारात् थिअं। थाणं। पत्थिओ। उत्थिओ। थाऊण ॥ १२७ ॥

**विस्मरः पम्हसवीसरौ ॥ १२८ ॥**

विस्मरतेः पम्हस वीसर इत्यादेशौ भवतः। पम्हसइ। वीसरइ॥ पक्षे विम्हइ॥ 'स्मष्म' [१-४-६७] इति स्मस्य म्हत्वे 'अर उः' [२-४-६६] इति ऋवर्णस्य रादेशे च सेत्स्यति ॥ १२८ ॥

**कृपो णिजवहः ॥ १२९ ॥**

कृप कृपायामित्यस्य धातोः अवह इत्यादेशो णिजन्तो भवति। अवहावेइ, कृपां करोतीत्यर्थः ॥ १२९ ॥

**जाणमुणौ ज्ञः ॥ १३० ॥**

ज्ञा अवबोधने इत्यस्य धातोः जाण मुण इत्यादेशौ भवतः। जाणइ। मुणइ॥ बहुलाधिकारात्क्वचिद्विकल्पः। जाणिअं मुणिअं णाअं ज्ञातम्॥ जाणिऊण णाऊण ज्ञात्वा। जाणणं णाणं ज्ञानम्॥ मणइ इति तु मन्यतेरेव। ॥ १३० ॥

**धो दह श्रदः ॥ १३१ ॥**

श्रदित्यव्ययात्परस्य डुधाञ् धारणपोषणयोः इत्यस्य धातोः दह इत्यादेशो भवति। सद्दहइ। सद्दहमाणो जीवो। सद्दहणं होइ सम्मत्तं ॥ १३१ ॥

---

127. K °ठक्क°; S °डक्क° for °थक्क in the Sūtra and Com. K तिष्ठतेर्धातोः for तिष्ठतेः. K ठक्कइ; S डंकइ for थक्कइ. KM पट्ठिओ for पट्ठाओ. M उट्ठिओ for उट्ठाओ. 128. S विस्मरः पम्हिरवीसरौ; T विस्मुः पम्हुसवीसरौ for the Sūtra. 129. T अवहवेइ for अवहावेइ. 130. KMST om. मुणिअं.

**स्पृशश्छिवालुक्खफरिसफासफंसालिहच्छिहान् ॥ १३२ ॥**

स्पृश स्पर्शने इत्ययं स्पृशतिः छिव आलुक्ख फरिस फास फंस आलिह छिह इति सप्तादेशानापद्यते । छिवइ । आलुक्खइ । फरिसइ । फासइ । फंसइ । आलिहइ । छिहइ ॥ १३२ ॥

**फक्कस्थक्कः ॥ १३३ ॥**

फक्कतेः थक्क इत्यादेशो भवति । थक्कइ ॥ १३३ ॥

**श्लाघः सलाहः ॥ १३४ ॥**

श्लाघृ कत्थने इत्यस्य धातोः सलाह इत्यादेशो भवति । सलाहइ ॥ १३४ ॥

**थिप्पस्तृपः ॥ १३५ ॥**

तृप प्रीणने इत्यस्य धातोः थिप्प इत्यादेशो भवति । थिप्पइ ॥ १३५ ॥

**भियो भाबिहौ ॥ १३६ ॥**

ञिभी भये इत्यस्य धातोः भा बिह इत्यादेशौ भवतः । भाइ भाअइ । भाइअं ॥ बिहइ । बिहिअं ॥ भीअं इति तु सिद्धावस्थायाम् ॥ १३६ ॥

**भुजिरण्णभुञ्जकम्मसमाणचमडचड्डुजेमजिमान् ॥ १३७ ॥**

भुज पालनाभ्यवहारयोः इत्ययं धातुः अण्ण भुञ्ज कम्म समाण चमड चड्ड जेम जिम इत्यष्टादेशानापद्यते । अण्णइ । भुञ्जइ । कम्मइ । समाणइ । चमडइ । चड्डइ । जेमइ । जिमइ ॥ १३७ ॥

---

132. T आलुंख° for आलुक्ख° in the Sūtra. S °फस्स° for °फंस° in the Sūtra, Com. and illustrations. B om. छिहइ. 133. MS पक्कः for फक्कः in the Sūtra. 134. S सलाघः for सलाहः in the Sūtra. 135. Bp KS छिप्पस्तृपः for the Sūtra. BM इत्यस्माद्धातोः for इत्यस्य धातोः. K छिप्प; S छप्प for थिप्प. K छिप्पइ for थिप्पइ. 137. MST अण्ह° for अण्ण° in the Sūtra, Com. and illustrations.

**जृम्भेऽवेर्जम्भा ॥ १३८ ॥**

जृभी गात्रविनामे इत्यस्य धातोः जम्भा इत्यादेशो भवति। अवेः वि इत्युपसर्गात्परस्य न भवति। जम्भाइ। जम्भाअइ ॥ अवेरिति किम्। केलिपसरो विअम्भइ ॥ १३८ ॥

**जुञ्जजुज्जजुप्पा युजेः ॥ १३९ ॥**

युजिर्योगे इत्यस्य धातोः जुञ्ज जुज्ज जुप्प इति त्रय आदेशा भवन्ति। जुञ्जइ। जुज्जइ। जुप्पइ ॥ १३९ ॥

**जनो जाजम्मौ ॥ १४० ॥**

जनी प्रादुर्भावे इत्यस्य जा जम्म इत्यादेशौ भवतः। जाइ। जाअइ। जम्मइ ॥ १४० ॥

**उत्थल उच्चलेः ॥ १४१ ॥**

उत्पूर्वस्य चल गनावित्यस्य धातोः उत्थल इत्यादेशो भवति। उत्थल्इ ॥ १४१ ॥

**घूर्णेघुम्मपहल्लघोलघुलाः ॥ १४२ ॥**

घूर्ण भ्रमणे इत्यस्य धातोः घुम्म पहल्ल घोल घुल इति चत्वार आदेशा भवन्ति। घुम्मइ। पहल्लइ। घोलइ। घुलइ ॥ १४२ ॥

**लिम्पो लिपः ॥ १४३ ॥**

लिपेर्धातोः लिम्प इत्यादेशो भवति। लिम्पइ ॥ १४३ ॥

**शदेर्झडपक्खोडौ ॥ १४४ ॥**

शद्लृ शातने इत्यस्य झड पक्खोड इत्यादेशौ भवतः। झडइ। पक्खोडइ ॥ १४४ ॥

---

138. KMS जृम्भोऽवेर्जंभा; T जृंभोवेर्जंभा for the Sūtra. KS विर्जंभइ for विअम्भइ. 140. After इत्यस्य S adds धातोः. 141. S उच्छल उच्छलेः for the Sūtra. BKM उत्थलेः for उच्चलेः in the Sūtra. S शल गतौ for चल गतौ. S उच्छलइ for उत्थलइ. 143. S लिम्पो लिपः for the Sūtra. S लिप्पइ for लिम्पइ. 144. S षदेः for शदेः in the Sūtra.

**नेः सदेर्मज्जः ॥ १४५ ॥**

निपूर्वस्य षदॢ विशरणगत्यवसादने इत्यस्य मज्ज इत्यादेशो भवति। अत्ता एत्थ णुमज्जइ, श्वश्रूरत्र निषीदति ॥ १४५ ॥

**पुच्छः पृच्छेः ॥ १४६ ॥**

पृच्छतेः पुच्छ इत्यादेशो भवति । पुच्छइ ॥ १४६ ॥

**गण्ठो ग्रन्थेः ॥ १४७ ॥**

ग्रन्थेर्गण्ठ इत्यादेशो भवति । गण्ठइ ॥ १४७ ॥

**तुवरजअडौ त्वरेः ॥ १४८ ॥**

त्वरेः तुवर जअड इत्यादेशौ भवतः । तुवरइ । जअडइ । तुवरन्तो । जअडन्तो ॥ १४८ ॥

**अतिङि तुरः ॥ १४९ ॥**

त्वरेरित्यनुवर्तते । तिङ्वर्जिते प्रत्यये परतः त्वरेः तुर इत्यादेशो भवति । तुरिओ । तुरन्तो ॥ अतिङीति किम् । तुवरइ ॥ १४९ ॥

**तूरः शतृतिङि ॥ १५० ॥**

शतृप्रत्यये तिङि च परे त्वरतेः तूर इत्यादेशो भवति । तूरन्तो । तूरइ ॥ १५० ॥

**पर्यसः पल्लट्टपल्लोट्टपल्हत्थाः ॥ १५१ ॥**

परिपूर्वः असु क्षेपणे इत्ययं धातुः पल्लट्ट पल्लोट्ट पल्हत्थ इति त्रीनादेशानापद्यते । पल्लट्टइ । पल्लोट्टइ । पल्हत्थइ ॥ १५१ ॥

---

145. S शदेः for सदेः in the Sūtra. B om. the Com. on the Sūtra. M अत्था for अत्ता. 147. After गण्ठइ KMS adds गंठी. 148. MT °जअढौ for °जअडौ in the Sūtra, Com. and illustrations. 150. S शतृतिङो: for शतृतिङि in the Sūtra. 151. B पर्यसेः for पर्यसः in the Sūtra. B पलोट्ट for पल्लोट्ट° in the Sūtra. K पर्यसः for परिपूर्वः असु क्षेपणे इत्ययं धातुः. KM om. त्रीन्.

**मृद्नातेर्मलपरिहट्टखुड्डपन्नाडचड्डमड्डमडाः ॥ १५२ ॥**

मृद्नातेः मल परिहट्ट खुड्ड पन्नाड चड्ड मड्ड मड इति सप्तादेशा भवन्ति। मलइ । परिहट्टइ । खुड्डइ । पन्नाडइ । चड्डइ । मड्डइ । मडइ ॥ १५२ ॥

**दशिरोअक्खणिअच्छावअच्छचज्जावअज्झपुलअपुलोअदेक्खावअक्ख-पेच्छावआसपासणिअसच्चवावक्खान् ॥ १५३ ॥**

दशिर् प्रेक्षणे इत्ययं धातुः ओअक्ख णिअच्छ अवअच्छ चज्ज अवअज्झ पुलअ पुलोअ देक्ख अवअक्ख पेच्छ अवआस पास णिअ सच्चव अवक्ख इति पञ्चदशादेशानापद्यते। ओअक्खइ। णिअच्छइ । अवअच्छइ । चज्जइ । अवज्झइ । पुलअइ । पुलोअइ । देक्खइ । अवअक्खइ । पेच्छइ । अवआसइ । पासइ । णिअइ । सच्चवइ । अवअक्खइ । णिज्झअइ इति तु निपूर्वस्य ध्यायतेर्दर्शनार्थस्य ॥१५३॥

**झरपज्झरपच्चड्डखिरणिड्डुअणिब्बलाः क्षरेः ॥ १५४ ॥**

क्षरतेः झर पज्झर पच्चड्ड खिर णिड्डुअ णिब्बल इति षडादेशा भवन्ति। झरइ । पज्झरइ । पच्चड्डइ । खिरइ । णिड्डुअइ । णिब्बलइ ॥१५४॥

**कासेरवाद्वासः ॥ १५५ ॥**

अवात्परस्य कासेः वास इत्यादेशो भवति । ओवासइ ॥ १५५ ॥

**न्यसेर्णिमणुमौ ॥ १५६ ॥**

अस्यतेर्निपूर्वस्य णिम णुम इत्यादेशौ भवतः । णिमइ । णुमइ ॥१५६॥

---

152. S om. the Sūtra. KT °खुट्ट° for °खुड्ड° in the Sūtra. T खुट्ट खुट्टइ for खुड्ड खुड्डइ. M मडइ for मडइ. 153. T दश प्रेक्षणे for दशिर प्रेक्षणे. K अवअज्झइ for अवअच्छइ 154. T °पच्छड्ड° for °पच्चड्ड° in the Sūtra, Com. and illustrations. K °णिद्दुअ° for °णिड्डुअ° in the Sūtra and Com. M °णीदुअ° for °णिड्डुअ° in the Sūtra. M णिद्दुअइ for णिड्डुअइ. 155. T काशेः for कासेः in the Sūtra, and Com. 156. MST न्यसो for न्यसेः in the Sūtra.

**ग्रहेर्णिरुवारगेण्हवलहरपग्गाहिपच्चुआः ॥ १५७ ॥**

ग्रह उपादाने इत्यस्य धातोः णिरुवार गेण्ह बल हर पग्ग अहिपच्चुअ इति षडादेशा भवन्ति । णिरुवारइ । गेण्हइ । बलइ । हरइ । पग्गइ । अहिपच्चुअइ ॥१५७॥

॥ इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधरश्रीपादप्रसादासादितसर्वविद्याप्रभाव-श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ

द्वितीयाध्यायस्य चतुर्थः पादः ॥

द्वितीयोऽध्यायः समाप्तः ॥

---

157. T °पह° for °पग्ग° in the Sūtra, Com. and illustrations. M अहिवच्चअइ for अहिपच्चुअइ. Colophon : KST om. from °मदर्ह down to श्रीमत्. S °व्याकरणे वृत्तौ. T द्वितीयस्याध्यायस्य.

# तृतीयोऽध्यायः ॥

## प्रथमः पादः ॥

**होहुवहवा भुवेस्तु ॥ १ ॥**

भुवेर्धातोः हो हुव हव इति त्रय आदेशा भवन्ति तु । होइ । होन्ति । हुवइ हुवन्ति । हवइ हवन्ति ॥ पक्षे भवइ ॥ परिहीणविहवो भविउं पभवइ ॥ परिभवइ । संभवइ ॥ क्वचिदन्यदपि । उभअहुत्तं ॥ १ ॥

**पृथक्स्पष्टे णिव्वडः ॥ २ ॥**

भुवेरित्यनुवर्तते । पृथग्भूते स्पष्टे च कर्तरि भुवेः णिव्वड इत्यादेशो भवति । णिव्वडइ, पृथक् स्पष्टो वा भवतीत्यर्थः ॥ २ ॥

**प्रभौ हुप्पः ॥ ३ ॥**

त्वित्यनुवर्तते । प्रभुकर्तृकस्य भुवो हुप्प इत्यादेशो भवति तु ॥ अङ्गे वि न पहुप्पइ ॥ पक्षे । पहवइ प्रभवति ॥ ३ ॥

**हु क्ते ॥ ४ ॥**

भुवः क्तप्रत्यये परे हु इत्यादेशो भवति । हुअं ॥ ४ ॥

**हुरचिति ॥ ५ ॥**

चिद्वर्जिते प्रत्यये परे हु इत्यादेशो रिद् भवति तु । हुन्ति । होन्ति । हुओ ॥ अचितीति किम् । होइ ॥ ५ ॥

---

1. S होहुवहावा for होहुवहवा in the Sūtra. K भवेस्तु. M भवेः for भुवेस्तु in the Sūtra. KM भवेः for भुवेः. BT हरिहीणविभवो for परिहीणविहवो. B परभइ; S पहवइ; MT वहइ for पभवइ. B उभइ M उब्भवअइ; T उब्भुअइ for उभअ. S हुतं; T हंतं for हुत्तं. 2. T णिर्बन्धः for णिव्वडः in the Sūtra, Com. and illustrations. K णिव्वडइ for णिव्वडइ. 3. BT अंगे वि अ न for अङ्गे वि न. 4. M हूक्ते; T हूर्तेः for the Sūtra. M हूअं; S हुति for हुअं. 5. S om. the Sūtra and Com. upto हुओ. T om रिद्. T om. हुओ.

**आघ्राक्षिस्नामाइग्घणिज्झराब्बुत्ताः ॥ ६ ॥**

आजिघ्रतिक्षयतिस्नातीनां धातूनाम् आइग्घ णिज्झर अब्बुत्त इत्यादेशा यथासंख्यं भवन्ति तु । आइग्घइ आजिघ्रति । णिज्झरइ क्षयति । अब्बुत्तइ स्नाति ॥ पक्षे । अग्घाइ । खअइ । ण्हाइ ॥ ६ ॥

**रा वेर्लियः ॥ ७ ॥**

लीङ् श्लेषणे इत्यस्य धातोः वि इत्युपसर्गात्परस्य रा इत्यादेशो भवति तु । विराइ । विराअइ । विलिज्जइ ॥ ७ ॥

**निना ल्हिक्कणिलुक्कणिलिअलिक्कलुक्कणिरुग्घाः ॥ ८ ॥**

लिय इत्यनुवर्तते । नि इत्युपसर्गेण सह लीयतेः ल्हिक्क णिलुक्क णिलिअ लिक्क लुक्क णिरग्घ इति षडादेशा भवन्ति तु । ल्हिक्कइ । णिलुक्कइ । णिलिअइ । लिक्कइ । लुक्कइ । णिरुग्घइ ॥ पक्षे । णिलिज्जइ ॥ ८ ॥

**सारः प्रहृः ॥ ९ ॥**

प्रहरतेः सार इत्यादेशो भवति तु । सारइ ॥ पक्षे । पहरइ ॥ ९ ॥

**प्रसुरुवेल्लवअल्लौ ॥ १० ॥**

प्रसरतेः उवेल्ल वअल्ल इत्यादेशौ भवतः । उवेल्लइ । वअल्लइ । पसरइ ॥ १० ॥

**महमहो गन्धे ॥ ११ ॥**

प्रसरतेर्गन्धविषये महमह इत्यादेशो भवति तु । महमहइ मालईगन्धो ॥ गन्ध इति किम् । पसरइ ॥ ११ ॥

---

6. M °जि° for °क्षि° in the Sūtra. MT °अब्भुत्ताः in the Sūtra and Com. S °अब्भंताः in the Sūtra and Com. M °जयति°; T °क्षियति° for °क्षयति°. M झिज्जइ जयति; T क्षियति for क्षयति. M om. पक्षे here and elsewhere and hence the omission is not recorded hereafter. S अब्भंतइ for अब्बुत्तइ. 7. M लीयः for लियः in the Sūtra. 8. M °णिलीअ°; T °णिलीय° in the Sūtra and Com. MT °णिरग्घाः for णिरुग्घाः in the Sūtra, Com. and illustrations. 9. M वर्तते for अनुवर्तते. 10. S अवेल्ल° for उवेल्ल° in the Sūtra. T उब्वेलपअल्लौ in the Sūtra, Com. and illustrations. 11. T पाडईगंधो for मालईगन्धो. After °गन्धो M add S पक्षे पसरइ गंधो.

**झरझूरसुमरविम्हरहरहललुढपअरपम्हुहाः स्मरतेः ॥ १२ ॥**

स्मरतेः झर झूर सुमर विम्हर हर हल लुढ पअर पम्हुह इति नवादेशाः भवन्ति तु। झरइ। झूरइ। सुमरइ। विम्हरइ। हरइ। हलइ। लुढइ। पअरइ। पम्हुहइ॥ पक्षे। सरइ॥ १२॥

**व्याप्रेराअड्डः ॥ १३ ॥**

व्याप्रियतेः आअड्ड इत्यादेशो भवति तु॥ आअड्डइ। वावरइ॥१३॥

**निस्सुर्णिहरनिलदाढवरहाढाः ॥ १४ ॥**

निःसरतेः निहर निल दाढ वरहाढ इति चत्वार आदेशा भवन्ति तु। निहरइ। निलइ। दाढइ। वरहाढइ। नीसरइ॥ १४॥

**जाग्रेर्जग्गः ॥ १५ ॥**

जागृ निद्राक्षये इत्यस्य धातोः जग्ग इत्यादेशो भवति तु। जग्गइ। जागरइ॥ १५॥

**पट्टघोट्टडल्लपिज्जाः पिबेः ॥ १६ ॥**

पिब इति विहितादेशस्य पा पाने इत्यस्य धातोः पट्ट घोट्ट डल्ल पिज्ज इत्यादेशाश्चत्वारो भवन्ति तु। पट्टइ। घोट्टइ। डल्लइ। पिज्जइ॥ पक्षे। पिबइ॥ १६॥

---

12. Bp S °जूर° for °झूर° in the Sūtra, Com. and illustrations. KM °लढ° for °लुढ° in the Sūtra, Com. and illustrations. S °पम्हहाः for °पम्हुहाः in the Sūtra. M विस्मरतेः for स्मरतेः in the Sūtra. 13. MT आअड्ढ; S आअंडः in the Sūtra, Com. and illustrations. KS वावारइ; M वारइ for वावरइ. 14. M नीहरनील° in the Sūtra, and Com. T °थाढ° for °दाढ° in the Sūtra, Com. and illustrations. S वरहाडाः in the Sūtra. K नीहरइ for णिहरइ. 15. K जागृतेर्जग्गः for the Sūtra. Mss. om. तु in Com. promiscuously and hence not noted henceforward. 16. KM इति चत्वार आदेशा भवन्ति. T पीवइ for पिवइ.

**धुवो धूञः ॥ १७ ॥**

धूञ् कम्पने इत्यस्य धातोः धुव इत्यादेशो भवति तु। धुवइ। धुणइ ॥ १७ ॥

**हणः शृणोतेः ॥ १८ ॥**

श्रु श्रवणे इत्यादेशो भवति तु। हणइ। सुणइ ॥ १८ ॥

**म्लैर्वापव्वाऔ ॥ १९ ॥**

म्लै गात्रविनामे इत्ययं धातुः वा पव्वाअ इत्यादेशावापद्यते तु। वाइ। पव्वाअइ। मिलाइ ॥ १९ ॥

**कृञः कुणः ॥ २० ॥**

डुकृञ् करणे इत्यस्य धातोः कुण इत्यादेशो भवति तु। कुणइ। करइ ॥ २० ॥

**काणेक्षिते णिआरः ॥ २१ ॥**

कृञ इत्यनुवर्तते। कृञः काणेक्षितविषये णिआर इत्यादेशो भवति तु। णिआरइ, काणेक्षितं करोतीत्यर्थः ॥ २१ ॥

**निष्टम्भे णिट्ठुहः ॥ २२ ॥**

निष्टम्भविषयस्य कृञः णिट्ठुह इत्यादेशो भवति तु। णिट्ठुइ, निष्टम्भं करोतीत्यर्थः ॥ २२ ॥

**श्रमे वावम्फः ॥ २३ ॥**

श्रमविषयस्य कृञः वावम्फ इत्यादेशो भवति तु। वावम्फइ, श्रमं करोति ॥ २३ ॥

---

17. S धुवो धूङः for the Sūtra. धूङ् कम्पने for धूञ् कम्पने. 18. T हुणः for हणः in the Sūtra, Com. and illustrations. 19. T मम्लैर्वापम्वायौ for the Sūtra. K °पव्वाओ in the Sūtra. T उप्पाअइ for पव्वाअइ. 20. S कृङः कुणः for the Sūtra. 21. T काणेक्षिके for °क्षिते in the Sūtra and Com. Bp णिअरः; S णाआरः for णिआरः in the Sūtra. S कृङ् for कृञ्. KM °विषयस्य for °विषये. 23. T वावंफः for वावम्फः in the Sūtra, Com. and illustrations.

**संदाणोऽवष्टम्भे ॥ २४ ॥**

अवष्टम्भविषयस्य कृञः संदाण इत्यादेशो भवति तु। संदाणइ, अवष्टम्भं करोति ॥ २४ ॥

**णिव्वोलो मन्युनौष्ठमालिन्ये ॥ २५ ॥**

मन्युना करणेन यदोष्ठमालिन्यं तद्विषये कृञो णिव्वोल इत्यादेशो भवति। णिव्वोलइ, मन्युना ओष्ठं मलिनं करोति ॥ २५ ॥

**गुललश्चाटौ ॥ २६ ॥**

चाटुविषयस्य कृञो गुलल इत्यादेशो भवति। गुललइ, चाटु करोतीत्यर्थः ॥ २६ ॥

**पअल्लो लम्बनशैथिल्ययोः ॥ २७ ॥**

लम्बनशैथिल्यविषयस्य कृञः पअल्ल इत्यादेशो भवति। पअल्लइ, लम्बयति शैथिल्यं करोति वा ॥ २७ ॥

**क्षुरे कम्मः ॥ २८ ॥**

क्षुरविषयस्य कृञः कम्म इत्यादेशो भवति तु। कम्मइ, क्षुरं करोति ॥ २८ ॥

**णिलुञ्छो निष्पाताच्छोटे ॥ २९ ॥**

निष्पतनविषयस्य आच्छोटनविषयस्य च कृञः णिलुञ्छ इत्यादेशो भवति तु ॥ णिलुञ्छइ, निष्पतति आच्छोटयति वा ॥ २९ ॥

---

24. B सद्दाणो for संदाणो in the Sūtra, Com. and illustrations. 25. KM णिब्बोलो for णिव्वोलो in the Sūtra, Com. and illustrations. After °मालिन्यं B adds करोति. 26. T गुग्लः for गुललः in the Sūtra. T गुल्लइ for गुललइ. 27. M लंब° for लम्बन° in the Sūtra. M om. from पअल्लइ down to the end of Com. 28. M om. the Sūtra and Com. upto तु. M करोतीत्यर्थः for करोति. 29. B णिलुञ्छो in the Sūtra, Com. and illustrations. K निष्पातविषयस्य for निष्पतन-विषयस्य. K आच्छोटविषयस्य for आच्छोटन°. K om. च.

**साहट्टसाहरौ संवृः ॥ ३० ॥**

संपूर्वस्य वृणोतेः साहट्ट साहर इत्यादेशौ तु भवतः । साहट्टइ । साहरइ । संवरइ ॥ ३० ॥

**ओहिरोग्घौ निद्रः ॥ ३१ ॥**

निपूर्वस्य द्रै स्वप्ने इत्यस्य धातोः ओहिर उग्घ इत्यादेशौ तु भवतः । ओहिरइ । उग्घइ । णिद्दाइ ॥ ३१ ॥

**उद्व ओरुम्मावसुऔ ॥ ३२ ॥**

उत्पूर्वस्य वा गतिगन्धनयोः इत्यस्य धातोः ओरुम्मा वसुआ इत्यादेशौ तु भवतः । ओरुम्माइ । वसुआइ । उव्वाइ ॥ ३२ ॥

**रुवो रुञ्जरुण्टौ ॥ ३३ ॥**

रु शब्दे इत्येतस्य रौतेर्धातोः रुञ्ज रुण्ट इत्यादेशौ तु भवतः । रुञ्जइ । रुण्टइ । रुवइ ॥ ३३ ॥

**कोक्कवोक्कौ व्याहृः ॥ ३४ ॥**

व्याहरतेः कोक्क वोक्क इत्यादेशौ तु भवतः । कोक्कइ । वोक्कइ । वाहरइ ॥ ३४ ॥

**संनाम आदृङः ॥ ३५ ॥**

आद्रियतेः संनाम इत्यादेशो भवति तु । संनामइ आदरइ ॥ ३५ ॥

**ओहरोसराववतरेस्तु ॥ ३६ ॥**

अवपूर्वस्य तॄ प्लवनतरणयोः इत्यस्य धातोः ओहर ओसर इत्यादेशौ तु भवतः । ओहरइ । ओसरइ ॥ त्वधिकारे पुनस्तुग्रहणमधिकारस्यानुस्मरणार्थम् ॥ ३६ ॥

---

31. T ओहीरोग्घौ for ओहिरोग्घौ in the Sūtra. T ओहीर for ओहिर. T ओहीरइ for ओहिरइ. 32. B °वसऔ; KMS °वसूआ for °वसुऔ in the Sūtra. 34. °पोक्कौ for °वोक्कौ in the Sūtra, Com. and illustrations. 36. M ओह° for ओहर° in the Sūtra, Com. and illustrations. M त्विकरणे for त्वधिकारे. Bp °कर्षणार्थं for °नुस्मरणार्थम्.

